दशमः सर्गः

**हनुमता पुष्पकविमाने नानालङ्कारोपशोभितशयनोत्तमशायिनो नानाभरणादिविभूषितवपुषो रावणस्यावलोकनम् । तथातत्पादमूलेवीणावेणुमृदङ्गादि नानावाद्यैस्सहसंसुप्तनानावस्थापन्ननारीनिकरनिरीक्षणम् । तथा तासां मध्येऽद्भुतशयनशायिनीं मन्दोदरींदृष्टवतातेन तदद्भुतरूपेणतस्यांसीतात्वबुद्ध्या हर्षेण पुच्छचुम्बनादिकापेयचेष्टाविष्करणम् ॥**

तत्र दिव्योपमं मुख्यं स्फाटिकं रत्नभूषितम् |
अवेक्षमाणो हनुमान्ददर्श शयनासनम् || 5.10.1||

दान्तकाञ्चनचित्राङ्गैर्वैदूर्यैश्च वरासनैः ।
महार्हास्तरणोपेतैरुपपन्नं महाधनैः॥5.10.2॥

तस्य चैकतमे देशे दिव्यमाल्योपशोभितम् |
ददर्श पाण्डुरं छत्रं ताराधिपतिसंनिभम् || 5.10.3||

जातरूपपरिक्षिप्तं चित्रभानोः समप्रभम् ।
अशोकमालाविततं ददर्श परमासनम् ॥5.10.4॥

वालव्यजनहस्ताभिर्वीज्यमानं समन्ततः |
गन्धैश्च विविधैर्जुष्टं वरधूपेन धूपितम् || 5.10.5||

परमास्तरणास्तीर्णमाविकाजिनसंवृतम् |
दामभिर्वरमाल्यानां समन्तादुपशोभितम् || 5.10.6||

तस्मिञ्जीमूतसङ्काशं प्रदीप्तोज्ज्वलकुण्डलम् |
लोहिताक्षं महाबाहुं महारजतवाससं || 5.10.7||

लोहितेनानुलिप्ताङ्गं चन्दनेन सुगन्धिना |
सन्ध्यारक्तमिवाकाशे तोयदं सतडिद्गुणम् || 5.10.8||

वृतमाभरणैर्दिव्यैः सुरूपं कामरूपिणम् |
सवृक्षवनगुल्माढ्यं प्रसुप्तमिव मन्दरम् || 5.10.9||

क्रीडित्वोपरतं रात्रौ वराभरणभूषितम् |
प्रियं राक्षसकन्यानां राक्षसानां सुखावहम् || 5.10.10||

पीत्वाप्युपरतं चापि ददर्श स महाकपिः |
भास्वरे शयने वीरं प्रसुप्तं राक्षसाधिपम् || 5.10.11||

निःश्वसन्तं यथा नागं रावणं वानरोत्तमः |
आसाद्य परमोद्विग्नः सोऽपासर्पत्सुभीतवत् || 5.10.12||

अथारोहणमासाद्य वेदिकान्तरमाश्रितः |
क्षीबं राक्षसशार्दूलं प्रेक्षते स्म महाकपिः || 5.10.13||

शुशुभे राक्षसेन्द्रस्य स्वपतः शयनं शुभम् |
गन्धहस्तिनि संविष्टे यथाप्रस्रवणं महत् || 5.10.14||

काञ्चनाङ्गदसनद्धौ ददर्श स महात्मनः |
विक्षिप्तौ राक्षसेन्द्रस्य भुजाविन्द्रध्वजोपमौ || 5.10.15||

ऐरावतविषाणाग्रैरापीडनकृतव्रणौ |
वज्रोल्लिखितपीनांसौ विष्णुचक्रपरिक्षतौ || 5.10.16||

पीनौ समसुजातांसौ सङ्गतौ बलसंयुतौ |
सुलक्षण नखाङ्गुष्ठौ स्वङ्गुलीतललक्षितौ || 5.10.17||

संहतौ परिघाकारौ वृत्तौ करिकरोपमौ |
विक्षिप्तौ शयने शुभ्रे पञ्चशीर्षाविवोरगौ || 5.10.18||

शशक्षतजकल्पेन सुशीतेन सुगन्धिना |
चन्दनेन परार्ध्येन स्वनुलिप्तौ स्वलङ्कृतौ || 5.10.19||

उत्तमस्त्रीविमृदितौ गन्धोत्तमनिषेवितौ |
यक्षपन्नगगन्धर्वदेवदानवराविणौ || 5.10.20||

ददर्श स कपिस्तस्य बाहू शयनसंस्थितौ |
मन्दरस्यान्तरे सुप्तौ महाही रुषिताविव || 5.10.21||

ताभ्यां स परिपूर्णाभ्याम्  उभाभ्यां राक्षसेश्वरः |
शुशुभेऽचलसङ्काशः शृङ्गाभ्यामिव मन्दरः || 5.10.22||

चूतपुंनागसुरभिर्बकुलोत्तमसंयुतः |
मृष्टान्नरससंयुक्तः पानगन्धपुरःसरः || 5.10.23||

तस्य राक्षसराजस्य निश्चक्राम महामुखात्  |
शयानस्य विनिःश्वासः पूरयन्निव तद्गृहम् || 5.10.24||

मुक्तामणिविचित्रेण काञ्चनेन विराजता |
मुकुटेनापवृत्तेन कुण्डलोज्ज्वलिताननम् || 5.10.25||

रक्तचन्दनदिग्धेन तथा हारेण शोभिता |
पीनायतविशालेन वक्षसाभिविराजता || 5.10.26||

पाण्डुरेणापविद्धेन क्षौमेण क्षतजेक्षणम् |
महार्हेण सुसंवीतं पीतेनोत्तरवाससा || 5.10.27||

माषराशिप्रतीकाशं निःश्वसन्तं भुजङ्गवत् |
गाङ्गे महति तोयान्ते प्रसुप्तमिव कुञ्जरम् || 5.10.28||

चतुर्भिः काञ्चनैर्दीपैर्दीप्यमानं चतुर्दिशम् |
प्रकाशीकृतसर्वाङ्गं मेघं विद्युद्गणैरिव || 5.10.29||

पादमूलगताश्चापि ददर्श सुमहात्मनः |
पत्नीः स प्रियभार्यस्य तस्य रक्षःपतेर्गृहे || 5.10.30||

शशिप्रकाशवदना वरकुण्डलभूषणाः |
अम्लानमाल्याभरणा ददर्श हरियूथपः || 5.10.31||

नृत्तवादित्रकुशला राक्षसेन्द्रभुजाङ्कगाः |
वराभरणधारिण्यो निषन्ना ददृशे कपिः || 5.10.32||

वज्रवैदूर्यगर्भाणि श्रवणान्तेषु योषिताम् |
ददर्श तापतीयानि कुण्डलान्यङ्गदानि च || 5.10.33||

तासां चन्द्रोपमैर्वक्त्रैः शुभैर्ललितकुण्डलैः |
विरराज विमानं तन्नभस्तारागणैरिव || 5.10.34||

मदव्यायामखिन्नास्ता राक्षसेन्द्रस्य योषितः |
तेषु तेष्ववकाशेषु प्रसुप्तास्तनुमध्यमाः || 5.10.35||

अङ्गहारैस्तथैवान्या कोमलैर्नृत्यशालिनी ।
विन्यस्तशुभसर्वाङ्गी प्रसुप्तावरवर्णिनी ॥5.10.36||

का चिद्वीणां परिष्वज्य प्रसुप्ता सम्प्रकाशते |
महानदीप्रकीर्णेव नलिनी पोतमाश्रिता || 5.10.37||

अन्या कक्षगतेनैव मड्डुकेनासितेक्षणा |
प्रसुप्ता भामिनी भाति बालपुत्रेव वत्सला || 5.10.38||

पटहं चारुसर्वाङ्गी न्यस्य शेते शुभस्तनी |
चिरस्य रमणं लब्ध्वा परिष्वज्येव कामिनी || 5.10.39||

काचिद्वीणां परिष्वज्य सुप्ता कमललोचना |
वरं प्रियतमं गृह्य सकामेव हि कामिनी ॥ 5.10.40||

विपञ्चीं परिगृह्यान्या नियता नृत्यशालिनी |
निद्रावशमनुप्राप्ता सहकान्तेव भामिनी ॥ 5.10.41||

अन्या कनकसङ्काशैर्मृदुपीनैर्मनोरमैः |
मृदङ्गं परि विद्ध्याङ्गैः प्रसुप्ता मत्तलोचना || 5.10.42||

भुजपाशान्तरस्थेन कक्षगेण कृशोदरी |
पणवेन सहानिन्द्या सुप्ता मदकृतश्रमा || 5.10.43||

डिण्डिमं परिगृह्यान्या तथैवासक्तडिण्डिमा |
प्रसुप्ता तरुणं वत्समुपगूह्येव भामिनी || 5.10.44||

काचिदाडम्बरं नारी भुजसम्भोगपीडितम् |
कृत्वा कमलपत्राक्षी प्रसुप्ता मदमोहिता || 5.10.45||

कलशीमपविद्ध्यान्या प्रसुप्ता भाति भामिनी |
वसन्ते पुष्पशबला मालेव परिमार्जिता || 5.10.46||

पाणिभ्यां च कुचौ काचित्सुवर्णकलशोपमौ |
उपगूह्याबला सुप्ता निद्राबलपराजिता || 5.10.47||

अन्या कमलपत्राक्षी पूर्णेन्दुसदृशानना |
अन्यामालिङ्ग्य सुश्रोणीं प्रसुप्ता मदविह्वला || 5.10.48||

आतोद्यानि विचित्राणि परिष्वज्य वरस्त्रियः |
निपीड्य च कुचैः सुप्ताः कामिन्यः कामुकानिव || 5.10.49||

तासामेकान्तविन्यस्ते शयानां शयने शुभे |
ददर्श रूपसम्पन्नामथ तां स कपिः स्त्रियम् || 5.10.50||

मुक्तामणिसमायुक्तैर्भूषणैः सुविभूषिताम् |
विभूषयन्तीमिव च स्वश्रिया भवनोत्तमम् || 5.10.51||

गौरीं कनकवर्णाभामिष्टामन्तःपुरेश्वरीम् |
कपिर्मन्दोदरीं तत्र शयानां चारुरूपिणीम् || 5.10.52||

स तां दृष्ट्वा महाबाहुर्भूषितां मारुतात्मजः |
तर्कयामास सीतेति रूपयौवनसम्पदा |
हर्षेण महता युक्तो ननन्द हरियूथपः || 5.10.53||

आस्पोटयामास चुचुम्ब पुच्छं
ननन्द चिक्रीड जगौ जगाम |
स्तम्भानरोहन्निपपात भूमौ
निदर्शयन्स्वां प्रकृतिं कपीनाम् || 5.10.54||